ॐ भद्रं कर्णेभि श्रृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः ।

स्थिरैरंगैस्तुष्टुवां सहस्तनुभिः व्यशेम देवहितं यदायुः ।1

ॐ शांतिः । शांतिः ।। शांतिः ।।।

अथ सूर्याथर्वाङ्गिरसं व्याख्यास्यामः-

ब्रह्मा ऋषिः -गायत्री छन्दः-आदित्यो देवता -हंस सोऽहं अग्निनारायणयुक्तं बीजं-हृल्लेखा शक्तिः-वियदादिआदिसर्गसयुक्तं कीलकं- धर्म अर्थ काम मोक्ष इषु जपे विनियोगः ।

षड्स्वरारूढेन बीजेन षडङ्गं रक्ताम्बुजसंस्थितं सप्ताश्वरथिनं हिरण्यवर्णं चतुर्भुजं पद्मद्वयाभयवरद हस्तं कालचक्रप्रणेतारं श्रीसूर्यनारायणं य एवं वेद स वै ब्राह्मणः ।

ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं-ॐ तत् सवितुः वरेण्यं भर्गो देवस्य धीमहि धियो योनः प्रचोदयात् परोरज सेसावदोम् ।

ॐ आपः ज्योति रसो अमृतं ब्रह्म भूः भुवः स्वः ॐ

सूर्य आत्मा जगतस्तस्थुषश्च ।

सूर्यात् वै खल्विमानि भूतानि जायन्ते । सूर्यात् यज्ञाः-

पर्जन्यः अन्नः आत्मा । नमस्ते आदित्याय त्वमेव केवलं कर्मकर्तासि ।

त्वमेव प्रत्यक्षं ब्रह्मासि - त्वमेव प्रत्यक्ष विष्णुरसि ।

त्वमेव प्रत्यक्षं रुद्रोऽसि । त्वमेव प्रत्यक्षं ऋगसि । त्वमेव प्रत्यक्षं यजुरसि ।
त्वमेव प्रत्यक्षं सामासि । त्वमेव प्रत्यक्षं अथर्वासि -त्वमेव सर्वं छन्दोऽसि ।
आदितयाद् वायुः जायते आदित्याद् भूमिः जायते ।
आदित्याद् आपः जायन्ते आदित्याद् ज्योतिः जायते ।
आदित्याद् व्योम दिशो जायन्ते । आदित्याद् वेदा जायन्ते ।
आदित्याद् देवा जायन्ते आदित्यो वा एष एतन् मण्डलं तपति ।
असावादित्यो ब्रह्म । आदित्यो अन्तःकरण मनो बुद्धि चित्त- अहंकारः ।
आदित्यो वै व्यान समान उदान अपान प्राणः ।
आदित्यो वै श्रोत्र वाक् चक्षुः रसना नासाः ।
आदित्यो वै वाक् पाणि पाद उपस्थ पायुनि । आदित्यो वै शब्द स्पर्श रूप
रस गन्धाः । आदित्यो वै वचन आदान गमन आनन्द विसर्गः ।
आनन्द मयो ज्ञानमयो विज्ञानमयो आदित्यः ।
नमो मित्राय भानवे मृत्योः मा पाहि भ्राजिष्णवे विश्व हेतवे नमः ।
सूर्यो नो दिवः पातु वातो अन्तरिक्षात् । अग्निः न पार्थिवेभ्यः ।
सूर्यात् भवन्ति भूतानि सूर्येण पालितानि तु ।
सूर्ये लयं प्राप्नुवन्ति यः सूर्यः सोऽहं एव च । चक्षुः नो देवः सविता चक्षुः
न उत पर्वतः । चक्षुः धाता दधातु नः ।
आदित्याय विद्महे सहस्त्र कराय धीमहि तन्नो सूर्यः प्रचोदयात् ।
सविता पश्चात्तात् सविता पुरस्तात् । सविता उत्तरात्तात् सविता- अधरात्तात्
सविता नः सुवतु सर्व तातिम् सविता नो रासतां दीर्घमायुः ।

ॐ इति एकाक्षरं ब्रह्म घृणिः इति द्वे अक्षरे । सूर्य इति अक्षर द्वयं आदित्य इति त्रीण्य अक्षराणि । एतद् वै सुर्यस्य अष्टाक्षरं मनुं यः सदाहरहः जपति । सो ब्रह्मण्यो ब्राह्मणो भवति ।

सुर्याभिमुखं जप्त्वा महाव्याधि भयात् प्रमुच्यते ।

अलक्ष्मीः नश्यति अभक्ष्य भक्षणात् पूतो भवति ।

अपेय पानात् पूतो भवति अगम्य गमनात् पूतो भवति ।

व्रात्य संभाषणात् पूतो भवति असत् संभाषणात् पूतो भवति ।

मध्यान्हे सुर्याभिमुखः पठेत् सद्यः पन्च महापापात् प्रमुच्यते ।

सैषा सावित्री विद्यां न किंचित् अपि कस्मै चित् प्रशन्सयेत् ।

य एतां महाभागः प्रातः पठति स भाग्यवान् जायते ।

पशुं विन्दति -वेदार्थं लभते -त्रिकालं जप्त्वा क्रतु शत फलं प्राप्नोति ।

यो हस्त आदित्ये जपति स महामृत्युं तरति स महामृत्युं तरति य एवं वेद इति उपनिषद ।

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।

स्वस्ति नः तार्क्ष्यो अरिष्ट नेमिः स्वस्ति नो बृहस्पतिः दधातु ।2।

ॐ शांतिः। शांतिः।। शांतिः।।।